**चच्चिक्कचित्तला मंडियम्मि कुमुयम्मि चंदोज्जं।**
**चक्खुड्डं च पेक्खणिए चंचप्परमसच्चम्मि ॥४॥**

चच्चिक्कं तथा चित्तलं मण्डितम्। चित्तलं रमणीयमित्यन्ये। चंदोज्जं कुमुदम्। स्वार्थे के चंदोज्जयं। अत्र चंदिमा चन्द्रिका। चवला विद्युत्। इति चन्द्रिकाचपलाशब्दभवौ। चवइ कथयति। चयइ शक्नोति। चज्जइ पश्यति। चच्छइ तक्ष्णोति। इत्यादयो धात्वादेशेषूक्ता इति नोक्ताः। चक्खुड्डं प्रेक्षणीयम्। चंचप्परं असत्यम्॥ यथा।

चंचप्परं ण भणिमो कुणिसि चक्खुड्डणं कडक्खेहिं।
चंदुज्जयचच्चिक्का दिसाउ मय[1]णाहिचित्तलकवोले ॥४॥ (४)

**मोरम्मि चंदइल्लो चउक्करो कत्तिकेयम्मि।**
**चडियारो आडोवे अहिभेए [2]चक्कुलंडा य ॥५॥**

चंदइल्लो मयूरः। चउक्करो कार्त्तिकेयः। चडियारो आटोपः। [2]चक्कुलंडा सर्पविशेषः॥ यथा।

गणवइगज्जियणच्चंतचउक्करचंदइल्लसद्देहिं।
तट्ठगल[3]चक्कुलंडो णच्चइ रुद्दो सचडियारं ॥५॥ (५)

**णामम्मि चरुल्लेवं चक्खडियं जीवियव्वम्मि।**
**[4]चंदट्ठिया य खवए उम्मीए चक्कणाहयं चेअ ॥६॥**

चरुल्लेवं नाम। चक्खडियं जीवितव्यम्। चंदट्ठिया भुजशिखरम्। स्तवक इत्यन्ये। यदाहुः॥ स्तवकश्चंदट्ठियासंज्ञ इति। अत्र चच्चरीओ भ्रमरः। चंदमाला जालकृता गृहोपरि कुटिका। इति चच्चरीकचन्द्रशालाशब्दभवौ। चच्चुप्पइ अर्पयति। चमढइ भुङ्क्ते। चं[5]कमइ भ्रमति। इत्यादयो धात्वादेशेषूक्ता इति नोच्यन्ते। चक्कणाहयं ऊर्मिः॥

णीसासचक्कणाहयतावियचंदट्ठियाइ तुह विरहे।
कंठम्मि तीइ वट्टइ चक्खडियं तुह तणा चरुल्लेवं ॥६॥ (६)

1 A °णाहिंचि° 2 AB चक्कलुंडा च 3 AB चक्कलुंडो. 4 AB चंदिट्ठिया. 5 AB °क्कमइ.

हालम्मि चउरचिंधो णारङ्गफलम्मि चक्कणभयं च।
चंदवडाया अद्धावरियङ्गी चक्खुरक्खणी लज्जा ॥७॥

चउरचिंधो सातवाहनः। चक्कणभयं नारङ्गफलम्। चंदवडाया अर्धप्रावृत-देहा। चक्खुरक्खणी लज्जा ॥ यथा।

दट्ठूण तुमं चक्कणभयत्थणी अवरचउरचिंधं व।
तम्मइ चंदवडाया मुद्धा वि हु मुक्कचक्खुरक्खणिया ॥७॥

अत्र चलणाउहो कुक्कुट इति चरणायुधशब्दभवः॥ (७)

चडुलातिलयं कंचणसंकलियालंबिरयणतिलयम्मि।
सढतंडुलसिरभूसासु चाडचाउलयचालवासा य ॥८॥

चडुलातिलयं काञ्चनशृङ्खलालम्बिरत्नतिलकम्। चडुला रत्नतिलकमित्यन्ये। चाडो मायावी। चाउला तण्डुलाः। चालवासो शिरोभूषणभेदः ॥ यथा।

जीए तुज्झ णिहित्तं चडुलातिलयं च चालवासो [1]य।
तं चेअ चाड अणुसर किं चाउलखंडणीइ मए ॥८॥ (८)

गंठिच्छेययगिम्हाणिलेसु चारणयचारवाया वि।
चिल्ला सउलीए चिविडणासए चिच्चिच्चिरया ॥९॥

चारणओ ग्रन्थिच्छेदकः। कप्रत्ययाभावे चारणो। चारवाओ ग्रीष्मानिलः। चिल्ला शकुनिकाख्यः पक्षी। चिच्चो तथा चिच्चिरो चिपिट[2]नासः ॥ यथा।

न हु मेल्लइ पहरंती हो चिच्चं चिच्चिरं च चिल्लं च।
उअ [3]मयणो माणिणि माणगंठिचारणयचारवायसहो ॥९॥ (९)

बालम्मि चिल्लचिडा चिच्चं रमणे हुयासणे चिच्ची।
चिंचिणिचिंचा अम्बिलियाए तह [4]चिंचणी घरट्टीए ॥१०॥

1 C च. 2 A °नासकः, B °नासिकः, 3 AB मयणी, 4 AB चिंचिणी,

चिल्लो तथा चेडो बालः। चिच्चं रमणम्। चिच्चो हुताशनः। चिंचिणी तथा चिंचा अम्लिका। केचित् चिंचिणिचिंचाशब्दः समस्त एव अम्लिकावाचकत्वेन प्रोक्तः। [1]चिंचणी घरट्टिका॥ यथा।

> चिंचवणि चिंचिणियाचडिए चेडम्मि चिच्चठियचिल्ला।
> उअ धावइ जणणी [2]चइअ [3]चिंचणीचिच्चिकम्माइं॥१०॥ (१०)

**मसयम्मि चिल्लिरी रोमसम्मि चिमिणो कु[4]डीए चिरया य।**
**चिक्खल्लो कद्दमए मुसले [5]चिल्लूरचेलुंपा॥११॥**

चिल्लिरी मशकः। चिमिणो रोमशः। चिरया कुटी। चिक्खल्लो कर्दमः। चिल्लूरं तया चेलुंपं मुसलम्॥ यथा।

> चिक्खल्लियचिरयाए चिल्लिरिडसिया तुहारिणो चिमिणा।
> कंडन्ति सयं [6]चिल्लूरएण चेलुंपपाणितुल्ल[7]बला॥११॥

अत्र चिंचइ मण्डयतीति धात्वादेशेषूक्त इति नोक्तः॥ (११)

**उल्ले चिलिच्चिल[8]चिलिच्चीला परितोसियम्मि चि[9]त्तठिओ।**
**चिरिहिट्टी [10]य चिणोट्टी महुपडले चित्तदाऊ [10]य॥१२॥**

चिलिच्चिलं तथा [11]चिलिच्चीलं आर्द्रम्। चि[9]त्तठिओ परितोषितः। चिरिहिट्टी गुञ्जा। चिणोट्टीशब्दोऽपि देश्यः। पर्यायभङ्ग्या तूपात्तः। चित्तदाऊ मधुपटलम्। केचित् तिणिसम्मि चित्तदाऊ इति पठन्ति [12]तिणिसं च वृक्षविशेषमाचक्षते। अस्माभिस्तु सारतरदेशीदर्शनेन [13]तिणिसशब्दो मधुपटलार्थो व्याख्यातः। तत्र युक्तायुक्तत्वे बहुदृश्वानः प्रमाणम्॥ यथा।

> सवरी सेयचिलिच्चिलमंसुचिलिच्चीलमरि[14]वहुं तुज्झ।
> चिरिहिट्टिलोयणो महइ चित्तदाउं च चि[15]त्तठिअचित्तो॥१२॥ (१२)

1 AB चिंचिणी 2 AB रइय 3 AB चिंचिणी° 4 C °डीद. 5 AB चेल्लू°.
6 A चिल्लरएणं B चिल्लरयएण. 7 AB °बली. 8 AB °चिलच्चो°. 9 AB °त्तविणो. 10 C च.
11 AB चिलच्चो 12 AB तिनं. 13 AB चित्तदाऊश°. 14 AB °वह. 15 AB °त्तवियचि°.

चण्डातकम्मि चिंफुल्लणी चिरिंचिराचिरिंचिरा धारा।
चलियम्मि य चिंचइओ [1]णिसासियम्मि चिइविओ ॥१३॥

चिंफुल्लणी स्त्रीणामर्धोरुकवस्त्रम्। चिरिंचिरा तथा चिरिंचिरा जलधारा। चिंचइओ चलित:। चिंचइओ मण्डित इति तु मण्डिधात्वादेशे [2]सिद्धम्। चिइविओ निर्वापित: ॥ यथा।

घणजलचिरिंचिराचिइविया पवसियवइउ चिंचइया।
णयणंसुचिरिंचिरोल्लियचिंफुल्लणि[3]याउ पियइत्तं ॥१३॥

अत्र चिंचिल्लइ मण्डयतीति धात्वादेशेषूक्त इति नोक्त: ॥ (१३)

दहिए चिरिड्डिहिल्लं चोही मुत्थासमुत्थतिणे।
चो[4]वट्टी भल्लीए चुक्को मुट्ठीइ चुज्जमच्छरिए ॥१४॥

चिरिड्डिहिल्लं दधि। चोही मुस्तोद्भवं तृणम्। चो[4]वट्टी भल्ली। चुक्को मुष्टि:। चुज्जं आश्चर्यम्। श्रोत्संयोगे इति चोज्जं इत्यपि ॥ यथा।

सा हिंडिरे [5]तइ चिरिड्डिहिल्ल[6]मत्त णवचोहिसमयम्मि।
दढचुक्ककामचोवट्टिताडिया जं जिएइ तं चुज्जं ॥१४॥ (१४)

परिसोसियम्मि चुंक्को ससिणेहे चुप्प[7]चोप्फुचा।
चुल्ली सिलाइ चुडुली उक्का चुणिओ विधारियए ॥१५॥

चुंक्को परिशोषित:। चुप्पो तथा [8]चोप्फुचो सस्नेह:। चुल्ली शिला। अत्र। चुच्छं तुच्छम् इति तुच्छशब्दभवत्वान्नोक्तम्। चुडुली उल्का। चुणिओ विधारित: ॥ यथा।

सुंदर तइ [9]चोप्फुचा अचुप्पविरहग्गिचुडुलिचुंक्का वि।
बालधरिय व्व चुल्ली सा अच्छइ आसतंतुचुणिअप्पा ॥१५॥ (१५)

1 AB निश्वासि°. 2 C सिद्ध:. 3 AB °या इ. 4 AB °वट्टी.
5 AB तइं. 6 A °मत्त. 7 AB °चोप्पुचा. 8 AB चोप्पुचो.
9 AB चोप्पुचा

चुसासी दासी चुंचुयचुप्पलचुंभला य सेहरए ।
चुसाआ [1]अ कलाए छागम्मि [2]य चुक्कुडचुलुप्पा ॥१६॥

चुसासी दासी। चुंचुओ तथा चुप्पलो तथा चुंभलो शेखरः। चुसाआ कला। चुक्कुडो तथा चुलुप्पो छागः ॥ यथा।

चुसासीइ सचुसाआए चुप्पलचुलुप्पिदुद्धाइं।
रे जडचुंभलचुक्कुड अप्पसु किं चुंचुआइणा [3]मज्झं ॥१६॥

अत्र चुक्कइ भ्रश्यतीति धात्वादेशेषूक्तमिति [4]नोक्तम् ॥(१६)

चुप्पालओ गवक्खे वत्थे णवरत्तयम्मि चुप्पलियं ।
चुल्लोडओ वि जेट्ठे चुसप्पहयम्मि चुसइओ ॥१७॥

चुप्पालओ गवाक्षः। चुप्पलियं नवरक्तं वस्त्रम्। चुल्लोडओ ज्येष्ठः। चुसइओ चूर्णाहतः। चुसइओ रेणुविच्छुरित इति तु चूर्णितशब्दभवः ॥ यथा।

चुप्पालयदारेणं णवचुप्पलियाइ पिच्छुपहरंती।
ओ चुल्लोडयजाया चुसइया देअरेण फग्गुछणे ॥१७॥ (१७)

अलसम्मि चुंचुमाली चुंचुलिपूरो [2]य चुलुयम्मि ।
वलयावलिथणसिहवामणएसुं चूडचूअचोला [1]अ ॥१८॥

चुंचुमाली अलसः। चुंचुलिपूरो [5]चुलुकः। अत्र चुलुचुलइ स्पन्दत इति धात्वादेशेषूक्तमिति नोक्तम्। चूडो वलयावली। चूओ स्तनशिखा। चोलो वामनः ॥ यथा।

तुह जलचुंचुलिपूरो वि दुल्लहो चुंचुमालिणो चोल।
मणिचूडमंडिया चारु[6]चूअआ कामिणीउ किं महसि ॥१८॥ (१८)

1 C य. 2 C च. 3 C मज्झ. 4 C नोच्यते. 5 AB चुलकः. 6AB चुयया.

मालूरतोत्तणहसिइचोद्दसिया चोढचोत्तचोरलिया ।
चच्चा य हत्थविंबे तलप्पहारे [1]य णायव्वा ॥१६॥

चोढो बिल्वः । चोत्तं प्रतोदः । चोरली श्रावणकृष्णचतुर्दशी ॥ यथा ।

चोरलिए[2]विंत्तयकणि चोढदलेहिं तए हरो महिओ ।
मयणसरचोत्त[3]णुण्णा जं तुममिसा अहिसरेइ ॥१८॥

चोप्पडइ म्रक्षतीति धात्वादेशेषू[4]क्तमितीह नोक्तम् ।

॥ अथानेकार्थाः ॥

चच्चा स्थासकः प्रहृतहस्ताघातश्च ॥ (१८)

चंडिज्जो खलकोविसु चप्फलं सेहरे असच्चे अ ।
कुंडलवट्टुलदोलाफलयविसालेसु चक्कलयं ॥२०॥

[5]चंडिज्जो पिशुनः कोपश्च । चप्फलं शेखरविशेषोऽसत्यं च । सामान्य-शब्दा अपि विशेषे वर्त्तन्त इति हि न्यायः । चक्कलं कुण्डलं वर्त्तुलं दोलाफलकं विशालं चेति चतुरर्थम् । अत्र चड्डइ मृद्नाति भुङ्क्ते पिनष्टि चेति धात्वादेशेषूक्तमिति नोक्तम् ॥(२०)

चारो पियालगुत्तीच्छासुं चिक्काप्पतणुयधारासु ।
चम्ममयवारिभंडे तणुधारादिणमुहेसु अ चिरिक्का ॥२१॥

चारो पियालवृक्षो बन्धनस्थानमिच्छा चेति त्र्यर्थः । चिक्का अल्पं वस्तु तनुधारा चेति द्व्यर्था । चिरिक्का चर्ममयजलभाण्डं तनुधारा प्रत्यूषश्चेति त्र्यर्था ॥ (२१)

चिंधालं रम्मे उत्तमे [1]य चुल्लो सिसुम्मि दासे [1]य ।
पाणप्पवालमुक्कच्छन्दारूढवइयरेसु चुण्णाओ वि ॥२२॥

1 C च. 2 AB °वियत्त°. 3 AB °णुन्ना. 4 AB °क्त इतीह नोक्तः. 5 चिंडि°.

चिंधालं रम्यं मुख्यं च। चुल्लो शिशुर्दासश्च। चुणओ चण्डालोऽल्पो बालो मुक्तच्छन्दोऽरोचको व्यतिकरश्चेति सप्तार्थः। चणओ विश्वरओ इति धनपालः। आघ्रातार्थेऽपीति केचित्॥ (२२)

चुंचुलुएसु चुंचुलि अवगमियसण्हयासु चुंचुलियं[1]।
चुंचुणिया चुअपडिरवरमणम्लिमुट्ठिजूअजूआसु॥२३॥

चुंचुलो चञ्चुश्चुलुकश्च। चुंचलि इति लुप्तविभक्त्यन्तो निर्देशः। चुंचुलियं अवधारितं सतृष्णता च। चुंचुणिया च्युतं प्रतिरवो रमणमल्लिका मुष्टिद्यूतं यूका चेति षडर्थाः। प्रतिरव इति सामान्यशब्दोऽपि विशेषे गोष्ठीप्रतिरवे वर्त्तते। यदाह॥ चुंचुणिया प्रतिरवो गोष्ठ्याम्॥ केचित् चुंचुणिअं चलितेऽप्याहुः॥(२३)

॥ अथ [2]छादयः॥

छल्ली तजाइ छट्टी सिज्जाए विज्जुलाइ छडा।
कविकच्छू छंकुइकुंकुईउ छलिया छइल्लछप्पसा॥२४॥

छल्ली त्वक्। छट्टी शय्या। छडा विद्युत्। अत्र छणो उत्सव इति चणशब्दभवोऽयमिति नोक्तः। छंकुई तथा कुंकुई कपिकच्छूः। छलिओ छइल्लो छप्पसो इत्येते त्रयोऽपि विदग्धार्थाः। अन्योन्यपर्यायभङ्ग्या तु निबद्धाः॥ यथा।

कयलीछल्लिं छंकुइमंवुजछट्टिं पि कुंकुइं मुणइ।
छलिएण छइल्लपिया तेण विणा छडचलेण छप्पसा॥२०॥ (२४)

छवडो चम्मं छप्पंतो णियमो जत्थ लिहियए पउमं।
तणुए छउयच्छिक्कोलिया छमलओ अ सत्तछए॥२५॥

छवडो चर्म। छप्पंतो नियमविशेषो यत्र पद्मं लिख्यते। छउयं तथा छिक्कोलियं तनु। छमलओ सप्तच्छदः॥ यथा।

1 AB °सण्हिया° 2 C छादिः.

जस्स कए छप्पंतिं करेसि छउयंगि सो वि तुज्झ कए।
छमलयतलम्मि छिक्कोलिऊण मिल्लेइ मिगछवडिं ॥२१॥

अत्र। छड्डइ मुञ्चति। छज्जइ राजति। इति धात्वादेशेषूक्ताविति नोक्तौ।

**खंदे छडक्खरो वि हु छासो तक्कम्मि रिच्छए छारो।**
**छाहो खे छाईओ माईओ लहुयमच्छए छिद्दो ॥२६॥**

छडक्खरो स्कन्दः। छासो तक्रम्। छारो अच्छभल्लः। छाहो गगनम्। छायावाचकस्तु छाहीशब्दश्छायाशब्दभव एव। छाईओ मातरः। छिद्दो लघुमत्स्यः॥ यथा।

छाइछडक्खरछाहोमणी ण पणमेसि कहसु कस्स कए।
छासोहारिणि धूए छारसिरे छिद्दगन्धिल्ले ॥२२॥ (२६)

**छिल्ली सिहाइ छित्तं छिविए जारेसु [1]छिसछिसाला।**
**छिव्वं कारिमसुच्छुदले छिवियं वाहलीइ छिंछोली ॥२७॥**

छिल्ली शिखा। छित्तं स्पृष्टम्। छिसो तथा छिसालो जारः। जारेष्वित्यविशेषाद् बहुवचनात् [2]छिसा छिसाली स्त्र्यपि। छिव्वं कृत्रिमम्। छिवियं इक्षुखण्डम्। छिंछोली वाहली। वाहलीशब्दश्च लघुजलप्रवाहवाचको देश्य एव वक्ष्यते॥ यथा।

छिव्वसिणेह[3]च्छित्तच्छिल्लिं छिविएण भोलिऊण सिसुं।
जं चलसि घडकरा तं [4]छिसे छिंछोलियाइ [5]छिसालो ॥२३॥ (२७)

**छिप्पीरं च पलाले छिप्पालो सस्ससत्तउसहम्मि।**
**छिल्लरमवि पल्ललए मुहविक्को[6]णो अ छिव्वोल्लो ॥२८॥**

1 AB छिन्नछिन्नाला. 2 AB छिन्ना छिन्नाली. 3 A °च्छिइत्तंच्छि°.
4 AB छिन्नो. 5 AB छिन्नालो. 6 AB °णे वि छि°.

छिप्पीरं पलालम् । छिप्पालो [1]सस्यसक्तो गौः । छिल्लरं पल्वलम् । छिव्वोल्लो निन्दार्थं मुखविकूणनम् । विकूणितं मुखमित्यन्ये ॥ यथा ।

तुज्झ कए बाहेहिं सा छिल्लरयं भरेइ दुट्ठ तुमं ।
छिव्वोल्लेण तमिक्खसि छिप्पीर[2]तिणं व छिप्पालो ॥२४॥

अत्र । छिवइ छिहइ स्पृश[3]ति । एतौ धात्वादेशेषूक्ताविति नोक्तौ । (२८)

छिप्पालुयछिक्कोअण[4]छिहंडया [5]पुच्छअसहणदहिसरा ।
[6]छिस्सोब्भवा य दुव्वा तह [7]छिस्सच्छोडणं सिग्घे ॥२९॥

छिप्पालुयं पुच्छम् । छिक्कोअणो असहनः । छिहंडओ दधिसरः । [6]छिस्सोब्भवा [8]दूर्वा । छिस्सच्छोडणं शीघ्रम् ॥ यथा ।

वरछिप्पालुय [6]छिस्सोब्भवाछिहं[9]डेहिं धवल पुट्ठो सि ।
[7]छिस्सच्छोडणगमणो हक्काछिक्कोअणो हवसु इण्हिं ॥२५॥ (२८)

दहिए छिहिंडिभिल्लं छिंछटरमणं च मिंचणक्कीला ।
छुंदं बहुयम्मि बलायाइ छुई लित्तए छुहियं ॥३०॥

छिहिंडिभिल्लं दधि । छिंछटरमणं चक्षुःस्थगनक्रीडा । छुंदं बहु । छुई बलाका । छुहियं लिप्तम् ॥ यथा ।

छुं[10]दघणच्छु[11]हिअं गहमुड्डीणछिहिंडिभिल्लधवलछुइं ।
जाव हयं ता तीए छिंछटरमणं स[12]हीहिं कयं ॥२६॥(३०)

छुरियछुरमड्डि[13]छुंछुंमुसया मट्टिछुरहत्थअरईसु ।
[14]छेंडी लहुरच्छाए छेली थोवप्पसूणमालाए ॥३१॥

छुरिया मृत्तिका । छुरमड्डी क्षुरहस्तः । नापित इति यावत् । छुरहत्थ शब्दोऽपि देश्यः । पर्यायभङ्ग्या तूपात्तः । [13]छुंछुंमुसयं रणरणकः । [14]छेंडी लघुरथ्या । छेली अल्पप्रसूना माला ॥ यथा ।

1 C सस्याम°' 2 AB °तिणेव. 3 AB °ति स्पृ इयति धा° 4 A °छिहडया 5 A पुंछ.
6 AB छिस्रोब्भ°. 7 AB छिस्र° 8 AB °र्वा तथा च्छिस्रच्छो°. 9 C °डेहि.
10 AB °दघण°. 11 AB °हिअहम्°. 12 C °हीहि. 13 AB °छुछुंम°.
14 A छिंडी.

जुत्तं [1]छुंछुंमुसयं करेसि छुरम[2]ड्डियाए छुरहत्थ।
छेलि च्चिय अणुरूवा छुरियाघडियस्स छेंडिजक्खस्स ॥२७॥ (३१)

छेत्तरमणव्वसुप्पाइ छेभओ हत्थविंबम्मि।
छागम्मि छेलओ खेत्तजागरे छेत्तसोवणयं ॥३२॥

छेत्तरं जीर्णं शूर्पाद्युपकरणम्। छेभओ ध्यासकः। छेलओ छागः। कप्रत्ययाभावे छेलो इत्यपि। छेत्तसोवणयं क्षेत्रे जागरणम् ॥ यथा।

मसिछेभइल्लवसणं परिहरिउं छेत्तरं व मं वहिणि।
तीइ कए सो [3]छेलो णिसि वच्चइ छेत्तसोवणमिसेण ॥२८॥ (३२)

[4]छोब्भो पिसुणे दासम्मि छोइओ अप्पियम्मि छोब्भत्थं।
छंटो जलच्छडासिग्घेसु छाओ [5]य भुक्खियकिसेसु ॥३३॥

[4]छोब्भो पिशुनः। केचित् [4]छोब्भो खल इति पूर्वदेशीषु पाठं दृष्ट्वा खलशब्द-विप्रलब्धाः खलं पिण्याकं व्याचक्षत उदाहरन्ति च। अस्माभिस्तु सारतरदेशी-पर्यालोचनेन [4]छोब्भो पिशुन इति [6]दृब्धमुदाहृतं च। तत्र बहुदृश्वानः प्रमाणम्। छोइओ दासः। छोब्भत्थं अप्रियम्। ह्रस्वः संयो[7]गे (सि० हे० १, ८४)। इति छुब्भत्थं इत्यपि ॥ यथा।

तीए कडिल्लवत्थं उत्तरियं करिय मज्झ दंसंतो।
किं काहिसि इह [8]अस्स रे छोइअ छोब्भ छोब्भत्थं ॥२८॥

॥ अथानेकार्थाः ॥

छंटो जलच्छटा शीघ्रश्चेति द्व्यर्थः। छाओ बुभुक्षितः कृशश्च। ननु छातोदरो युवदृशां क्षणमुत्सवोऽभूत् ॥ इत्यादौ छातशब्दस्य कृशार्थस्य दर्शनात् कथमयं देश्यः। नैवम्। छेदनार्थस्यैव छातशब्दस्य साधुत्वात्। न च धात्वनेकार्थता।

1 AB छुछुंसु°. 2 C °ड्डियाइ. 3 A छीली. 4 AB छोभो.
5 C च. 6 C इट्ठसु°. 7 AB °गे छु°. 8 AB अर्ध.

उत्तरमत्र। अनेकार्थता हि धातूनां लोकप्रसिद्धा। लोके च क्षातशब्दस्य छेदनार्थं मुक्तास्यैव कवेः प्रयोगो नान्येषामित्यलं बहुना॥ (३३)

धन्नाईणं मलणे गोमयवत्थेसु तह [1]छाणं।
छाया कित्तीभमरीसु छारयं उच्छुसकमउलेसु॥३४॥

छाणं धान्यादिमलनं गोमयं वस्त्रं चेति त्र्यर्थम्। छाणीत्यपि केषांचित्पाठः। छाया कीर्त्तिर्भ्रमरी च। छारयं इक्षुशल्कं मुकुलं च। (३४)

छाइ[2]ल्लो अ पईवे सरिसे ऊणे सुरूवे [3]य।
छिद्दकुडीसुं छिल्लं छिंडं सिहछत्तधूवजं[4]तेसुं॥३५॥

छाइल्लो प्रदीपः सदृशः ऊनः सुरूपश्चेति चतुरर्थः। छिल्लं छिद्रं कुटी च। छिल्लं [5]वृत्यन्तरमपीति केचित्। छिंडं चूडा छत्रं धूपयन्त्रं च। संयोगे पर इदेतोः कामचार इति छेंडं इत्यपि॥ (३५)

छिप्पं भिक्खापुच्छेसु छित्तछीएसु छिक्कं च।
छिवओ समूहणी[6]वीसु छिंकओ देहजारेसु॥३६॥

छिप्पं भिक्षा पुच्छं च। छिक्कं स्पृष्टं क्षुतं च। छिवओ समूहो नीवी च छिंकओ देहो जारश्च। केचित् छिंकयं शलाटुफलमाहुः॥ यथा।

धूयाइ पढमगब्भं व रक्खए उअह आढिया घरिणी।
तुम्बीइ पढमणिग्गयमावंधुरबंधणं छिंकं॥३०॥ (३६)

छिप्पंती वयऊसवभेए पिट्ठे वि [7]छिप्पिंडी।
छिक्कोट्टली [3]य पयरवपामद्दाछाणखंडेसु॥३७॥

छिप्पंती व्रतभेद उत्सवभेदश्चेति द्व्यर्थी। छिप्पिंडी व्रतोत्सवभेदौ पिष्टं

1 AB च्छाणं 2 AB °ल्लो वि प° 3 C च. 4 C °तेसु.
5 AB ह्रत्यन्त°. 6 C °वीसु. 7 AB छिप्पंडी.

चेति त्र्यर्था। छिकोट्टली अंघ्रिरवः पादाभ्यां धान्यमलनं गोमयखण्डं चेति त्र्यर्था ॥ (३७)

छिप्पंदूरं गोमयखण्डम्मि त[1]ह्वेव विसमम्मि ।
सिसुससिसु कुड्डहीरो छेओ अंतम्मि दिअरे अ ॥३८॥

छिप्पंदूरं गोमयखण्डं विषमं चेति द्व्यर्थम्। कुड्डहीरो शिशुः शशी च छेओ अन्तो देवरश्च ॥ (३८)

छेधो थासयचोरेसु सिहाणोमालियासु छेंडा वि ।
छोहो गणविक्खेवा छोव्भाइत्ती अछिप्पवेसासु ॥३९॥

छेधो स्थासकश्चौरश्च। छेंडा शिखा नवमालिका च। छोहो समूहो विक्षेपश्च। छोव्भाइत्ती अस्पृश्या द्वेष्या च ॥ (३९)

॥ अथ जादयः ॥

जंगा गोयरभूमी जच्चो पुरिसे तुसे जंभो ।
जयणं हयकवचम्मि जरंडो वुड्ढम्मि जण्हलो णीवो ॥४०॥

जंगा गोचरभूमिः। जच्चो पुरुषः। जंभो तुषः। जयणं हयसंनाहः। जरंडो वृद्धः। जरडो इत्यन्ये। जण्हलो [2]नीवो ॥ यथा।

जय[3]णेहिं हया गामा जं[4]गाहिं कणा अ जंभभाविणा ।
महिलाओ जण्ह[5]लोहिं सहंति गेहा जरंडजच्चेहिं ॥३१॥ (४०)

जडियं खचिए जगलं पंकसुरे [6]जंबुलो [7]य वाणीरे ।
णंगलसिहाइ जवणं जडम्मि जंभलजहाजाया ॥४१॥

जडियं खचितम्। जगलं पङ्किला सुरा। पङ्किलमरको जगलं इत्यन्ये।

1 C °ह्वेय. 2 AB णीवो. 3 C °णेहि. 4 C °गाहि.
5 C °लोहि. 6 AB जंतुली. 7 C च.

जंबुलो वानीरः। जंबुलं मद्यभाजनमिति सातवाहनः। जवणं हलशिखा। जंभलो तथा जहाजाओ जडः॥ यथा।

> मणिजडियवासभवणे जगलं जंबुलघरोचियं णिंतो।
> जहजाय कीस लज्जसि जवणोचियहत्थजंभल[1]त्तेणं॥३२॥

अत्र जगरो संनाह इति संस्कृतसमः। जंपइ कथयति। जवइ यापयति। इति धात्वादेशेषूक्ताविति नोक्तौ। (४१)

## जहिमा वियड्ढगाहा जवयजवरया जवंकुरए।
## जंघामओ [2]य जंघालुयम्मि जंबालयं च जलणीली॥४२॥

जहिमा विदग्धरचिता गाथा। जवओ तथा जवरओ यवाङ्कुरः। जंघामओ तथा जंघालुओ द्वावप्येतावन्योन्यपर्य्यायतया जङ्घालवाचकौ। जंबालं जलनीली। शैवालमित्यर्थः। जलनीलीशब्दो यदि संस्कृ[3]ते न रूढस्तदा देश्यः॥ यथा।

> जंघालुए ण[4]इअडं गया सि जं तुह तणम्मि जंबालो।
> तह जवरयगोवीओ तुह जहिमं तत्थ गायंति॥३३॥
> तं जवयगोरयंगिं भरिउं जंघामओ हविअ वच्च।
> जलणोलिदुग्गमग्गो ण विअम्भइ पाउसो जाव॥३४॥ (४२)

## जच्छंदओ सतंतम्मि जक्खरत्ती [2]य दीवाली।
## [5]जसोहणो णिसियरे जंघाछेओ [2]य चच्चरए॥४३॥

जच्छंदओ स्वच्छन्दः। कप्रत्ययाभावे जच्छंदो। जक्खरत्ती दीपालिका। [5]जसोहणो राक्षसः। जंघाछेओ चत्वरम्॥ यथा।

> मणिवल[6]एहिं कुणंती जंघाछेयम्मि जक्खरत्तिं व।
> [5]जसोहणाण वि तुमं णिसि जच्छंदेण किं डरसि॥३५॥ (४३)

1 C °सेण. 2 C च. 3 AB °ते रूढस्तदा न दे°.
4 AB °इतड°. 5 AB जसहोह°. 6 C °एहि.

विद्दवियम्मि जगडिओ जं[1]भणआई जहिच्छभणिराई।
जरलद्दियजरलविया गामीणे ऊरुए जहणरोहो ॥४४॥

जगडिओ विद्रावितः कदर्थित इत्यर्थः। जंभणओ यथेष्टवक्ता। जंभणभणो इति केचित्। उभयत्रादिग्रहणात्। जंपिच्छओ यथादृष्टमभिलषिता। जंपिच्छिरमग्गिरो यो यद्दृष्टं तदेव मृगयति इत्यादि। अत्र। [2]जअडइ त्वरते इति धात्वादेशेषूक्तमिति नोक्तम्। जरलद्दिओ तथा जरलविओ ग्रामीणः। जहणरोहो ऊरुः॥ यथा

जरल[3]द्दिआइ दट्ठुं पवणलहसंतंसुयं जहणरोहं।
ओ कामसरजगडिया जरलविया हुंति जं[4]भणया ॥३६॥ (४४)

जहणूसवमद्धोरू जं[5]कयसुकओऽप्पसुकयगिज्झम्मि।
जाडो गुम्मं जाई सुरा कविट्ठम्मि जाउरो ॥४५॥

जहणूसवं अर्धोरुकम्। जंकयसुकओ अल्पसुकृतग्राह्यः। जाडो गुल्मम्। जाई सुरा। जाउरो कपित्थः॥ यथा।

जाउरजाडिकंटयफट्टिरजहणूसवा वि तेण समं।
जाईलुद्धा वच्चसि जंकयसुकया सि तं पुत्ति ॥३७॥ (४५)

जालघडिया सिरहरे जिग्घियमोसिंघियत्थम्मि।
जिब्भोब्भवा य दु[5]व्वाइ [6]जीवयमई [7]य वाहमई ॥४६॥

जालघडिया चन्द्रशाला। जिग्घियं घ्रातम्। अत्र जिमियं भुक्तमिति भुजिधात्वादेशभवम्। जिब्भोब्भवा दूर्वा। [6]जीवयमई मृगाकर्षणहेतुर्व्याधमृगी॥ यथा।

1 A °भणिआइ. B °भणिआई. 2 AB जयडइ त्वरयतीति. 3 AB °द्दियाए. 4 AB °भणिया. 5 AB °व्वाए. 6 AB जीविय°. 7 C च.

जालघडियाइ जा तं ण णियसि [1]जोवयमइं व [2]मयणस्स।
ता भम हरिणो व्व तुमं कुलडाजिणोऽभवाउ [3]जिग्घंतो ॥३८॥

अत्र जोहइ लज्जत इति धात्वादेशेषूक्तमिति नोक्तम् ॥ (४६)

**जुण्णो छेगे जुयलो तरुणे अपरिग्गाहम्मि जुंजुरुडो।**
**जुयलियजुरुमिल्ला दुगुणियगहणा जूयओ य बप्पीहे ॥४७॥**

जुण्णो विदग्धः। जुयलो तरुणः। जुंजुरुडो अपरिग्रहः। जुयलियं द्विगुणितम्। जुरुमिल्लं गहनम्। जूरु[4]मिल्लयं इति गोपालः। जयओ चातकः॥ यथा।

जुंजुरुडाए घणरवजुयलियविसमसरवेयणाइ मह।
दुहजुरुमिल्लावत्थं कह जूयय तस्स [5]जुवजुयलस्स ॥३९॥

अत्र। जूरवइ वञ्चतीति धात्वादेशेषूक्तमिति नोक्तम् ॥४७॥

**जेमणयं दाहिणए अंगे जो रं च जो किरत्थम्मि।**
**जोक्खमचोक्खे जोओ चंदे जोग्गा य चाडुम्मि ॥४८॥**

जेमणयं दक्षिणमङ्गं हस्तादि। जो रं यः [6]किलेत्यर्थे। जोक्खं मलिनम्। जोओ चन्द्रः। जोग्गा चाटु ॥ यथा।

जयसिरिणिवासजेमणभुअ तुह गुणवसणम्मि का जोग्गा।
जो रं जसेण चालुक्क जोक्खमवहरसि जोअस्स ॥४०॥ (४८)

**णक्खत्ते जोडं जोइसं च जोई [7]य विज्जूए।**
**खलियम्मि जोइरो जोइक्खो दीवम्मि जोडिओ वाहो ॥४९॥**

जोडं तथा जोइसं नक्षत्रम्। जोई विद्युत्। जोइरो स्खलितः। जोइक्खो दीपः। जोडिओ व्याधः ॥ यथा।

1 AB जोवियमय°. 2 AB मयण°. 3 AB जिग्घिंतो. 4 AB °मिल्लियं.
5 AB जुव°. 6 C किरेत्थ°. 7 C च.

मेहम्मि पिहियजोइसवइजोडे रुइरजोइजोइक्खे ।
हिंड[1]ति अजोइरया वम्महजोडियसराहया कुलडा ॥४१॥ (४८)

णयणम्मि जोयणं तह खज्जोए जोइयं जाण ।
जोइंगणो अ इंदोवि जोवारोइ जोखलिया ॥५०॥

जोयणं लोचनम् । जोइओ खद्योत: । जोइंगणो इन्द्रगोप: । जोखलिया जोवारी धान्यम् । जोवारोशब्दोऽपि देश्य एव ॥ यथा ।

चलजोइयजोइंगणमिकिवय जोखलियकारणं कालं ।
कासयवहुउ हरिसा उप्फुल्लयजोयणा हुंति ॥४२॥ (५०)

जोव्वण[3]णोरं तह जोव्व[4]णवेअं जोव्वणोवयं च जरा ।
जण्हं लहुपिढरे कसिणए [5]य जंपणमकित्तिवयणेसु ॥५१॥

जोव्वणणोरं तथा जोव्वण[6]वेअं तथा जोव्वणोवयं वय:परिणाम: । जोव्वणणीरो जोव्वणोवओ ऋच्छ इति चतुष्पदवर्गे यत्केनचिदुक्तं तस्य संमोह एव ॥ यथा ।

जोव्वणणोरं तरुणत्तणे वि विजिएंदियाण पुरिसाण ।
जोव्वणवेअे वि ण जोव्वणोवयं होइ इयराण ॥४३॥

॥ अथानेकार्था: ॥

जण्हं लघुपिठरं कृष्णं चेति द्व्यर्थम् । जंपणं अकीर्त्तिर्वचनं च । (५१)

वेडिअवरुणेसुं जंबुओ [5]य गामणिविडेसु जणउत्तो ।
जच्चंदणमगरू कुंकुमं च जोवो [5]य बिंदुथोवेसु ॥५२॥

जंबुओ वेतसवृक्ष: पश्चिमदिक्पालश्च । जणउत्तो ग्रामप्रधानपुरुषो विटश्च । जच्चंदणं अगरु: कुङ्कुमं च । जोवो बिन्दु: स्तोकं च । अत्र जूरइ खिद्यते क्रुध्यति चेति धात्वादेशेषूक्तमिति नोक्तम् ॥ (५२)

1 AB °ति य जो°.　　2 AB °णो वि.　　3 AB °णीर°.
4 A °णवयं.　　5 C च.　　6 AB °वेअं.

॥ अथ झादयः ॥

संततवरिसम्मि झडो झंखो तुट्ठे झला य मयतण्हा ।
[1]झंटो ल[2]हुड्डकेसेसु पीलूमायासु झंडुयझमाला ॥५३॥

झडो निरन्तरवृष्टिः । झंखो तुष्टः । झला मृगतृष्णा । झंटो लघूर्ध्वकेशाः । झंडुओ पीलुवृक्षः । झमालं इन्द्रजालम् ॥ यथा ।

ण झडिं झंखो वि रवी कुणइ झलं चेय इत्थ मरुदेसे ।
मुंच झमालाइ लुलंतझंटिओ झंडुया[3]इं चुंटेसु ॥४४॥ (५३)

झंडलिझंखरझंरया असईसुक्कतरु[4]सुवण्णारेसु ।
झउझरिझरुया खिक्खिरिमसएसु झंपणी पम्हे ॥५४॥

झंडली असती । झंखरो शुष्कतरुः । झरओ सुवर्णकारः । झज्झरी स्पर्शपरिहारार्थं चण्डालादीनां हस्तयष्टिः खिक्खिरीति । [5]झरुओ मशकः । मशकवाचशब्दार्थोर्यामपि वर्त्तन्ते । यदाह । मशकाख्यार्थेऽर्यामप्युच्यन्ते काव्यतत्त्वज्ञैः ॥ इति । झंपणी पक्ष्म ॥ यथा ।

[6]झरुआउलम्मि मौलियझंपणियं [7]झउझरीकरविरूवं ।
झंखरतलम्मि झरयाहमं इत्ता झंडली रमइ ॥ ४५॥ (५४)

वयणिज्जे झक्कियझिंखिया झरंको [8]य तिणपुरिसे ।
झंटियझंटलियाओ पहरियचंकमण[9]अत्थेसु ॥५५॥

झक्कियं तथा झिंखियं वचनीयम् । उज्झिंखियं वचनीयमिति तु उत्पूर्वेण झिंखियशब्देन सिद्धम् । झरंको तृणमयः पुरुषः । झरंतो इति केचित् । झंटियं प्रहृतम् । झंटलिया चङ्क्रमणम् ॥ यथा ।

1 AB झिंटो. 2 C हुडुके°. 3 C °डुयाइ. 4 AB °सुन्नया°.
5 A झरुवो. 6 A झज्झरयाउ° B झयया उ°. 7 AB °झंझ°.
8 C च. 9 A °यहत्थे°.

ण कुणंति झंटियं ण य झंटलियं झकियाइ अगणंता।
तुह कुमरवाल रिउणो अझिंखिय रणाजिरे झरंक व्व ॥४६॥

अत्र झडइ [1]शीयते झंपइ भ्रमतीत्यादयो धात्वादेशेषूक्ता इति नोक्ताः ॥५५॥

**दड्ढम्मि झलुसियं तह झलुंकिअं झामिअं चेअ।**
**झंकारियझंखरिया अवचयणे झोलियाइ झलझलिया ॥५६॥**

झलुसियं झलुं[2]किअं झा[3]मिअं त्रयमपि दग्धार्थम्। झंकारियं तथा झंखरियं अवचयनम्। झलझलिया झोलिका। झो[4]लिकाशब्दो यदि संस्कृते न रूढस्तदायमपि देश्यः ॥ यथा।

ताव झलुं[5]किअदवझलुसिओ तुह पयावझामिओ अ रिऊ।
फलझंकारियदलझंखरियाइं कुणइ झलझलियहत्थो ॥४७॥ (५६)

**झाडं लयगहणे झामरो जरो झाउलं च वउणिफले।**
**झारुअझिरिंडझीरा चीरीजरकूवलज्जासु ॥५७॥**

झाडं लतागहनम्। झामरो प्रवयाः। झाउलं कर्पासफलम्। झारुआ चीरो। झिरिंडं जीर्णकूपः। झीरा लज्जा ॥ यथा।

झाउलचुंटणकज्जे अझीर कह झामरं णिओएसि।
झारुअझाड[6]च्छन्ने झिरिंडए एस जं पडिही ॥४८॥(५७)

**झुंखो वज्जविसेसे झुत्ती छेयम्मि झुट्ठमलियम्मि।**
**झुझुरिझुंटणा[7]झुंझुंमुसया गुम्मप्पवहमणदुहेसु ॥५८॥**

झुंखो तुणयाख्यो वाद्यविशेषः। झुत्ती छेदः। झुट्ठं अलीकम्। [8]झुझुरी गुल्मः। झुंटणं प्रवाहः। अत्र झुणइ जुगुप्सत इति धात्वादेशेषूक्तमिति नोक्तम्। [9]झुंझुंमुसयं मनोदुःखम्। झुमुझुमुसयं इत्यन्ये ॥ यथा।

1 AB शीयंते. 2 AB °कियं. 3 AB °मियं. 4 AB °लियाश°.
5 AB °किय°. 6 AB °च्छन्ने. 7 AB °झं झुम°. 8 AB झुझरी.

तुह णत्थि झुट्ठझुत्तो झंटण[1]तडझुझुरीसु णाओ सि ।
[2]झुंझुंसुलयवईए मह कहियं तत्थ झुंखवाएहिं ॥४८॥(५८)

झुरं कुडिले झेरो जरघंटे झेंडुओ वि कंडुअए ।
अद्धमहिसीइ झोट्टी झोडप्पो चणय[3]धसम्मि ॥५९॥

झुरं कुटिलम् । अत्र झूरइ स्मरतीति धात्वादेशेषूक्तमिति नोक्तम् । झेरो [4]जरघण्टः । झेंडुओ कन्दुकः । झोट्टी अर्धमहिषी । झोडप्पो चणकधान्यम् । [5]शुष्कचणकशाकमित्यन्ये ॥ यथा ।

झोडप्पछेत्तकंठ झोट्टीओ कंठवद्धझेराओ ।
उअ चारइ गोववह खेल्लंती झेंडुएण झूरगई ॥५०॥(५९)

वाहम्मि झोडिओ झोंडलिया रासयसरिच्छकीलाए ।
टंक[6]च्छिणाजसतडतडत्थदीहगहिरेसु झससद्दो ॥६०॥

झोडिओ व्याधः । झोंडलिया रासकसदृशी क्रीडा ॥ यथा ।

झोंड[7]लियाइ खेल्लंतु ताव बालाउ हरिणियाउ व्व ।
आरोविऊण चावं पहरेइ [8]ण कामझोडिओ जाव ॥५१॥

॥ अथानेकार्थाः ॥

झसो टङ्कच्छिन्नमयशस्तटस्तटस्थो दीर्घगम्भीरश्चेति पञ्चार्थः ॥ (६०)

गयणट्ठेसुं झत्थं च झंपियं तुट्टघट्टिएसुं च ।
झसुरं तंबोलत्थेसु झंडुली असइकीलासु ॥६१॥

झत्थं गतं नष्टं च । झंपियं त्रुटितं घटितं च । झसुरं ताम्बूलमर्थश्च । झंडुली असती क्रीडा च ॥ (६१)

---

1 AB °तणझु°. 2 B झुंझुसु°. 3 AB धणम्मि. 4 A जरदघट; B जरदघण्टः. 5 A शुष्कं च°. 6 AB °च्छिन्नाज°. 7 C °लियाए. 8 AB न

पल्हत्थाकुट्ठेसुं झसियं चोहिमसएसु झिल्लिरिया ।
अंग[1]किडएसु झीणं अच्चत्थे अच्छए अ झूसरिअं ॥६२॥

झसियं पर्यस्तमाक्रुष्टं च । अत्र झंखइ संतप्यति विलपति उपालभते निःश्वसिति च । झरइ स्मरति चरति चेति धात्वादेशेषूक्तमिति नोक्तम् । झिल्लिरिया चोहीढ्यणं मशकश्च । झीणं अङ्गं [2]कीटश्च । झूसरिअं अत्यर्थं स्वच्छं च ॥ (६२)

॥ इत्याचार्यश्रीहेमचन्द्रविरचिता[3]यां देशीनाममालायां तृतीयो वर्गः ॥

---

1 AB °किडिए°  2 AB कट°.
3 AB °यां स्वोपज्ञदेशीशब्दसंग्रहवृत्तौ तृतीयो वर्गः ॥ छ ॥ ग्रं ५२४ ॥

---

## चतुर्थवर्गः ।

॥ अथ टादयः ॥

टमरो कीसचए टंकिअं पसरिए विमोडणे टसरं ।<br>
टसरोट्टं[1] सेहरए टट्टइया जवणियाए [2]य ॥१॥

टमरो केशचयः । टंकिअं प्रसृतम् । टसरं विमोटनम् । टसरोट्टं शेखरः । टट्टइया तिरस्करिणी ॥ यथा ।

मा संठवेसु टमरे टसरियचूअंकुराण टसरोट्टं ।<br>
टंकियमयंकजुण्हाइ अंतरे देसु [2]मामि टट्टइयं ॥१॥(१)

टंवरओ भारियए कराल[3]कसम्मि टप्परओ ।<br>
अरणियकुसुमे टक्कारिया य टारो अहमतुरए ॥२॥

टंवरओ भारिकः । गुरुरित्यर्थः । टप्परओ करालकर्णः । टक्कारी अरणि-कुसुमम् । टारो अधमतुरङ्गः ॥ यथा ।

टारम्मि चडियमित्तो टंवरओ टप्परो [4]य वामणओ ।<br>
झत्ति पडिओ हसिज्जइ टक्कारी[4]चुंटिरीहिं वणे ॥२॥(२)

टिप्पी टिक्कं तिलए टिंवरू तंबुरु च टिग्घरो थेरे ।<br>
टुंटो [5]छिन्नकरे [6]टेंटा जूयपयम्मि टेक्करं च थले ॥३॥

टिप्पी तथा टिक्कं तिलकम् । टिक्कं शिरसि स्तवक इत्यन्ये । टिंवरू तुम्बुरु । टिग्घरो स्थविरः । अत्र । टिविडिक्कइ मण्डयति । टिरिटिल्लइ भ्राम्यति । एतौ धात्वादेशेषूक्ताविति नोक्तौ । टुंटो छिन्नकरः । [7]टेंटा द्यूतस्थानम् । टेक्करं स्थलम् ॥ यथा ।

---

1 C थ. 2 A सामि. 3 AB °कण्णम्मि. 4 C °चुंटणोहि.<br>
5 AB छिन्न°. 6 A टेंटो B टेंढो. 7 B टेंटा.

चंदणटिक्कियपरवहुमिह टेक्करए रमंतियं दट्टुं ।
टिंबरुजोग्गय [1]टिग्घरटुंटयटेंटिअ करेसि किं टिप्पिं ॥३॥(३)

**टोलो सलहे टोलंबटोक्कणा महुयमज्जभंडेसु ।**
**असि[2]छिन्नखायजंघाखणित्तभित्तीतडेसु टंको वि ॥४॥**

टोलो शलभः । टोलो पिशाच इत्यन्ये । यदाह । टोलं पिशाचमाहुः सर्वे शलभं तु राहुलकः ॥ टोलंबो मधूकः । टोक्कणं मद्यपरिमाणभाण्डम् । केचित् टोक्कणखंडं मद्यमानभाण्डमाहुः ॥ यथा ।

टोलो व्व मा पड तुमं उज्जाणे वाणि[3]णीउ जं पुरओ ।
टोलंबवणे टोक्कणहत्था मयणग्गिजालाओ ॥४॥

॥ अथानेकार्थाः ॥

टंको खड्गच्छिन्नं खातं जङ्घा खनित्रं भित्तितटं चेति सप्तार्थः ॥(४)

॥ अथ ठादिः ॥

**ठल्लयठ[4]ड्ढयठविया णिद्धणउक्खित्तपडिमासु ।**
**ठाणो माणो ठाणिज्जो गोरवियम्मि सिग्घए ठिक्कं ॥५॥**

ठल्लो निर्धनः । ठड्ढओ उत्क्षिप्तः । ठड्ढओ अवकाश इत्यन्ये । ठविया प्रतिमा । ठाणो मानः । ठाणिज्जो गौरवितः । अयं दन्त्यादिरपीत्येके थाणिज्जो । ठिक्कं शिश्नम् ॥ यथा ।

ठाणो ण ठल्लयाणं ठाणिज्जत्तं ण याचि ठड्ढयाणं ।
ण य ठिक्कं संढाणं अठवियउवलाण ण य पूया ॥५॥(५)

॥ अथानेकार्थाः ॥

**गोरविउद्धेसुं ठरियं ठिवियं उद्धणियडहिक्कासु ।**
**दंतग्गहिए डक्कं डब्बो डावो [5]य वामकरे ॥६॥**

---

1 A डिग्घयटुंटय क° B डिग्घर्यटुंटय क° 2 AB °छिन्न°. 3 A °णोणी.
4 C °ड्ढयइवि°. 5 C च.

ठरियं गौरवितमूर्ध्वंस्थितं च। ठिवियं ऊर्ध्वं निकटं हिक्का चेति त्र्यर्थम्। ऊर्ध्वार्थे ठिययं इत्यन्ये॥

॥ अथ डादयः॥

डक्कं दन्तग्टहीतम्। दष्टार्थं तु दष्टशब्दभवम्। डव्वो तथा डावो वामकरः॥ यथा।

डव्वे फरयमडावे खग्गं गहिऊण तुह पई समरे।
पडुपच्चक्खं पसरइ अमरिसडक्काहरो एसो॥६॥(६)

डंडं डिंडी सोवियकप्पडखंडेसु तह डलो लोट्ठे।
डप्फं [1]सेल्ले डल्लं पिडियाइ अलिंजरे डहरो॥७॥

डंडं तथा डिंडो सूच्या संघटितानि वस्त्रखण्डानि। डंडीत्यप्यन्ये। डलो लोष्टः। डप्फं सेल्लाख्यमायुधम्। डल्लं पिटिका। डहरो अलिञ्जरम्॥ यथा।

डंडपरिहाणडिंडीपाउरणा चइयडप्फया तुज्झ।
रिउणो पल्लिवणिहरे डहरोडल्ले वहंति डलखलिरा॥७॥(७)

डहरो सिसू सिरहरम्मि डग्गलो दवपहम्मि ड[2]ड्डाडो।
रच्छाइ डंडओ डंभिओ [3]य कितवम्मि डंवरो घम्मे॥८॥

डहरो शिशुः। डग्गलो भवनोपरि भूमितलम्। ड[4]ड्डाडो दवमार्गः। डंडओ रथ्या। डंभिओ द्यूतकारः। डंवरो घर्मः॥ यथा।

गिण्हिय डहरे उत्तरिय डग्गला डंडएण तुह रिउणो।
ड[4]ड्डाडिडंवरिल्ले जंति वणे डंभिय व्व जरवसणा॥८॥

अत्र। डल्लइ पिबति। डरइ त्रस्यति। एतौ धात्वादेशेषूक्ताविति नोक्तौ॥(८)

डालो सा[5]हाए णयणे डायलडोलडोयणाया।
डियलो थूणा भेगम्मि [6]डिड्डरो डिंफियं च जलपडिए॥९॥

---

1 AB सिल्ले. 2 AB °ड्डालो. 3 C च. 4 B °ड्डालि°.
5 AB °हारइ. 6 AB डिंडुरो.

डाली शाखा । डायलं डोलो डोयणं त्रयोऽपि लोचनार्थाः । डियली स्थूणा । [1]डिड्डरो भेकः । डिंफियं जलपतितम् ॥ यथा ।

गयडोल डोयणेहिं ण णियसि डालिं लुणेसि डियलिकए ।
ता तरलियडायलओ गु[2]त्तिट्ठहि डिड्डरो व्व डिंफेसु ॥८॥

अत्र । डिंभइ स्रंसते । इति धात्वादेशेषूक्तमिति नोक्तम् ॥ (८)

**डिंडिल्लियं च खलिए वत्थे डोरं च कं[3]दलए ।**
**ओ[4]इसम्मि [5]य डीणं त[1]ह[6]व डीणोवयं उ[9]वरिं ॥१०॥**

डिंडिल्लियं खलिखचितं वस्त्रम् । डिंडिल्लियं स्खलिते हस्ते इति केचित् । यदाह ॥ डिंफियडिंडिल्लियया पतिते च स्खलितहस्ते च ॥ डोरं कन्दलः । डीणं अवतीर्णम् । उड्डीनवाचकस्तु संस्कृतभव एव । डीणोवयं उपरि ॥ यथा ।

विणड्ड डीणो सि तुमं बलिणिवडीणोवयं पयं देसि ।
डोरं लिहंति डिंडिल्लियं च परिहंति तेण तुह रिउणो ॥१०॥(१०)

**डुंबो सवचे डुंघो उयंचणे डुंगरो सेले ।**
**घंटम्मि डुंडुओ डोला सिविया दारुहत्थए [8]डोओ ॥११॥**

डुंबो श्वपचः । डुंघो उदञ्चनविशेषो नालिकेरमयः । डुंगरो शैलः । डुंडुओ जीर्णघण्टः । डोला शिबिका । अन्दोलनवाचकस्तु दोलाशब्दभवः । डोओ दारुहस्तः ॥ यथा ।

डुंगरआणियडोलाडोए [9]विक्किंतयस्स तुह रिउणो ।
डुंडुयसरस्स डुंबो त्ति छिविय डुंघयजलेण लेइ जणो ॥११॥(११)

---

1 AB डिंडुरो. 2 AB °त्तिडहि डिड्डिरो. 3 AB °दलिए. 4 AB °दसम्मि. 5 C च. 6 C °हच. 7 C °वरि. 8 AB डोवो. 9 AB विड्डंत°.

तंबोलभायणे डोंगिली तहा डोलिओ कसिणसारे।
डाऊ फलिहंसदुमे गणवइपडिमाविसेसे [1]य ॥१२॥

डोंगिली ताम्बूलभाजनविशेषः। डोंगिली ताम्बूलिनीत्येके। डोलिओ कृष्णसारः ॥ यथा।

दइयम्मि सावराहे एंते डोलियविसालणयणाए।
डोंगिलि[2]णिहित्तवीडयकङ्कणमिसओ परंमुहीइ ठियं ॥१२॥

॥ अथानेकार्थाः ॥

डाऊ फलिहंसकवृक्षो गणपतिप्रतिमाविशेषश्च ॥ (१२)

डोंगो [1]य हत्थबिंबे तंबोलट्ठाणभेए [1]य।
ढड्ढो भेरी ढंको [1]य वायसे ढंढणी [1]य कविकच्छू ॥१३॥

डोंगो ह्यासकस्ताम्बूलभाजनविशेषश्च।

॥ अथ ढादयः ॥

ढड्ढो भेरी। ढंको वायसः। ढंढणी कपिकच्छुः ॥ यथा।

[3]गोसुट्ठियढंकउले देउलवाइज्जमाणढड्ढे [1]य।
उट्ठविओ वेसाए ढंढणिछित्तो व्व तम्मइ भुअंगो ॥१३॥(१३)

[4]मक्कुणए ढंकुणढेंकुणा तहा ढंकणी पिहाणीए।
ढंसयमजसे वीणाइ ढंखरी ढक्कयं तिलए ॥१४॥

ढंकुणो तथा ढेंकुणो मत्कुणः। ढंकणी पिधानिका। ढंसयं अयशः। ढंखरी वीणाभेदः। ढक्कयं तिलकम् ॥ यथा।

---

1 C च. 2 AB °णिहत्त°. 3 AB गोसोट्ठि°. 4 C मंकुणए.

ढंखरिय ढंकुणहरे इमाइ मा वच्च ढक्कयं दट्ठुं।
ढेंकुणखद्धो ढंक[1]णिहणिओ णोहरसि ढंसरं ल[2]हिय ॥१४॥

अत्र ढक्कइ छादयति। ढंसइ विवर्त्तते। इति धात्वादेशेषूक्ताविति नोक्तौ। (१४)

**चिक्खल्ले ढंढरिओ ढंढसिओ गामजक्खम्मि।**
**णिच्चम्मि ढिक्कयं ढिंढयं जलगए बलाइया ढेंकी ॥१५॥**

ढंढरिओ कर्दमः। ढंढसिओ ग्रामयक्षः। केचिद् ग्रामवृक्ष इत्याचक्षते। यदाहुः। ढंढसिओ ढंढरिओ ग्रामतरौ कर्दमे चाख्ये॥ अत्र। ढंढल्लइ भ्रमति। ढंढोलइ गवेषयति। इति धात्वादेशेषूक्ताविति नोक्तौ। ढिक्कयं नित्यम्। ढिंढयं जलमध्यपतितम्। ढेंकी बलाका॥ यथा।

ढंढसियपूयणपरा [3]ढेंकीओ भणइ ढिक्कयं का वि।
दिट्ठो कह वि मह पई ढिंढो ढंढरियखुत्तो वा ॥१५॥

अत्र। ढिक्कइ वृषभो गर्जति। ढुमइ ढुसइ भ्रमति। इति धात्वादेशेषूक्ता इति नोक्ताः॥ (१५)

**अधणे ढेल्लो [4]ढेंढिअढोंघरया धूवियब्भमिरएसु।**
**[5]ढंढो पंक[6]णिरत्थे ढंढरढयरा पिसायईसासु ॥१६॥**

ढेल्लो निर्धनः। [7]ढेंढिओ धूपितः। ढोंघरो भ्रमणशीलः॥ यथा।

सिरिकुमरवाल रिउणो तुह दवडज्झंतपीलुधू[8]महया।
ण[9]वअगरुढेंढियाणं सुमरंति ढेल्ल[10]ढोंघरा रन्ने ॥१६॥

॥ अथानेकार्थाः ॥

ढंढो पङ्को निरर्थकश्चेति समाहारः। ढंढरो तथा ढयरो पिशाच ईर्ष्यायां चेति द्वावपि द्व्यर्थौ। (१६)

---

1 AB °णिउणोड. 2 A °हियं. 3 AB ढिंकी°. 4 AB ढेडिय°. 5 AB ढंकी.
6 AB °निरत्थो ढंढयढ°. 7 A ढंढि°. 8 AB °मरया. 9 B °वयग°. 10 A °ढीघरा B °ढोघरा.

**पिढरोग्रहजलिसुं ढमरं ढेंका हरिसकूवयतुलासु ।**
**णत्था णासारज्जू [1]आउत्ते णव्वणोव्वा य ॥१७॥**

ढमरं पिठरमुष्णजलं चेति द्व्यर्थम् । अत्र ढुंढुल्लइ भ्रमति गवेषयति चेति धात्वादेशेषूक्त इति नोक्तः । ढेंका हर्षः कूपतुला चेति द्व्यर्था ॥

॥ अथ णादिः ॥

णत्था नासारज्जुः । णव्वो तथा णोव्वो आयुक्तः ॥ यथा ।

भक्खंतिणं गामं णत्थारहिओसहेण व समग्गं ।
णव्व तए णोव्वाणं [2]असाण वि भंजिओ मग्गो ॥१७॥(१७)

**णड्डो आरूढे [3]णंदाणंदीणंदिणीउ गाईए ।**
**[4]परिवंचियम्मि णडिओ [5]य णच्चिरो रमणसीलम्मि ॥१८॥**

णड्डो आरूढः । णंदा णंदी णंदिणी त्रयोऽप्येते गोवाचकाः । अत्र णक्खा नखाः । णवि वैपरीत्ये । [6]णइ अवधारणे । एते शब्दानुशासने साधिता इति [7]नोक्ताः । णडिओ वञ्चितः । खेदित इत्यन्ये । णच्चिरो रमणशीलः ॥ यथा ।

अंबरणड्डे मेहे [8]णंदाआलोण णंदिणीगोट्ठे ।
ण सुणेसि णच्चिराणं जइ गीयं णंदिपुत्त णडिओ सि ॥१८॥(१८)

**मलिणम्मि णज्जरो णंदणो [5]य भिच्चम्मि णउब्भरो विमले ।**
**णलयमुसीरे सीहे णंदिक्खो णंदियं च सीहरुए ॥१९॥**

णज्जरो मलिनः । णंदणो भृत्यः । णउब्भरो विमलः । णलयं उशीरम् । णंदिक्खो सिंहः । णंदियं सिंहरुतम् ॥ यथा ।

णउब्भरजस तुह रिउणो णरवइणंदिक्ख णंदियं सोउं ।
णज्जरवत्था णलयकरा मालियणंदणा हविय जंति ॥१९॥(१९)

---

1 AB आवत्ते.    2 AB असाण.    3 AB णंदाणंदिणीउ.    4 AB परवं°.
5 C व.    6 AB णय.    7 AB, णोक्ताः.    8 AB णंदोवा°.

दुहियम्मि णहिओ [1]णड्डरी [2]य भेगम्मि मंदिरे णालियं।
णहरी छु[3]रीए णडुलो कच्छवए णहमुहो घूए ॥२०॥

णहिओ दुःखितः। [1]णड्डरो भेकः। णालियं गृहम्। णहरी क्षुरिका। णडुलो कच्छपः। द्वित्वे णड्डलो इत्यपि। णहमुहो घूकः॥ यथा।

णहमुहणलिए रुमो रुसं सोऊण तुह [4]रिउवहुणं।
णहरीहय व्व [5]णड्डरिणडुलोउ वि [6]णहिआ हुंति ॥२०॥

अत्र। णवर केवले। णवरि आनन्तर्ये। एतावव्ययौ। णव्वइ णज्जइ ज्ञायते। णडइ गुप्यति। एते धात्वादेशेषूक्ता इति नोक्ताः॥ (२०)

जत्थ पलासलयाए ज[7]णेहिं पइणाम पुच्छिया जुवई॥
अकहंतो णिहणिज्जइ णियमविसेसो णवलया सा ॥२१॥

यदाह। नियमविशेषश्च णवलया ज्ञेया। आदाय पलाशलतां भ्राम्यति लोकोऽखिलो यस्याम्। पृष्टा पतिनाम स्त्री निहन्यते चाप्यकथयन्ती॥ यथा।

दोलाविलाससमए पुच्छंतीहिं स[8]हीहिं पइणामं।
ल[9]ड्डीहिं हणिज्जंती वहुया णवलयवयं भरइ ॥२१॥(२१)

णवरिअ सहसा [10]ओआइए णमसियं तडिम्मि णहवल्ली।
णव्वाउत्तो भोगी कण्हे णक्खत्तणेमी अ ॥२२॥

णवरिअ सहसा। णमसियं उपयाचितकम्। णवसियं इत्यन्ये। णहवल्ली विद्युत्। णव्वाउत्तो ईश्वरः। नियोगिसुत इत्यन्ये। णक्खत्तणेमी विष्णुः॥ यथा।

णमसियस[11]एहिं पा[12]विअसि[13]रीइ णक्खत्तणेमिसममप्पं।
णव[14]रिअ णव्वाउत्तय मा [15]मुण णहवल्लिचंचला एसा ॥२२॥(२२)

---

1 AB णंडुरी. 2 C च. 3 C °रीइ. 4 AB रिऊण वहू. 5 AB णंडुरि°.
6 AB णिहिया. 7 AC °णेहि. 8 C °हीहि. 9 C °ड्डीहि. 10 AB उवयाइयए.
11 C °एहि. 12 B °विय°. 13 AB °रीए. 14 AB °रिय. 15 A मुण.

**जलभवफलभेए [1]णइमासयमुच्छिट्ठए णवोद्दरणं ।**
**णाओ गव्विट्ठे णाउल्लो गोमी विलम्मि णारोट्टो ॥२३॥**

[1]णइमासयं जलोद्भवः फलभेदः । [2]णवोद्दरणं उच्छिष्टम् । णाओ गर्विष्ठः । णाउल्लो गोमान् । णा रोट्टो बिलम् । कूसार इत्यन्ये ॥ यथा ।

> णाउल्ल [3]णवोद्दरणेण तूस मा विससु णायउड्डणयं ।
> दुलहणइमासयकए सया वि गोहा ण होइ णा[4]रोट्टे ॥२३॥ (२३)

**णालंबो जूडे णाहिदाममुल्लोअमज्झदामम्मि ॥**
**णालंपिअमक्कंदे जहणम्मि [5]य णाहिविच्छेओ ॥२४॥**

णालंबो कुन्तलः । णाहिदामं उल्लोचमध्यदाम । णालंपिअं आक्रन्दितम् । णाहिविच्छेओ जघनम् । णाहीए विच्छेओ इति वाक्यमपि जघनवाचकम् । यदाह ॥ णाहीए विच्छेओ जघनं केचित्तु णाहिविच्छेओ ॥ यथा ।

> पुणजम्मे कुसुमाइं ग[6]याइं णाल[7]बिणाहिदामेसु ।
> इय णालंपंते तुह [7]रिउवल्लण पिहुणाहिविच्छेया ॥२४॥ (२४)

**णामोक्कसियं कज्जे णिज्जणुवसा य सुत्तम्मि ।**
**भूए णिडो हलिद्दा णिग्गा णिहसो [5]य वम्मीए ॥२५॥**

णामोक्कसियं कार्यम् । [8]णिज्जो तथा णुवसो सुप्तः । णिडो पिशाचः । णिग्गा हरिद्रा । णिहसो वल्मीकः ॥ यथा ।

> णामोक्कसियं तुमए किं रे णिड णिग्गराग णिहसमुह ।
> तीए च्चिय जं णामं लवसि [9]णुवसो अणिज्जो [5]य ॥२५॥ (२५)

---

1 AB णयमा°. 2 AB णवुद्द°. 3 AB °रोड्डो. 4 AB °रोई. 5 C च.
6 C °याइ. 7 BC रिऊण. 8 AB णिज्भो. 9 AB णुमणो.

णिहुयं वावारे कामियाइ णिहुया य णिज्झरं [1]जुसे ।
णिवहो सामिद्धीए णियडी डंभे णिहुयमवि सुरए ॥२६॥

णिहुयं व्यापारः । णिहुया कामिता । णिज्झरं जीर्णम् । णिज्झूरं इत्यन्ये । णिवहो समृद्धिः । णियडी दम्भः । यदि निकृतिशब्दस्य प्रत्यादौ (सिद्धहेम० १,२०६) पाठ इष्यते तदा न देश्यः । णिहुयं सुरतम् ॥ यथा ।

णिहुआणिहु[2]अयाणं मा संभर मुंच णियडिणिहुणाइं ।
जं णिज्झरो सि इण्हिं कुणसु मणं पुरुसणिवहम्मि ॥ २६॥ (२६)

तुण्हिक्कम्मि णिउक्को णिरुलो [3]मयराकिइग्गाहे ।
णिहयं कूले णिगढो घम्मे णिसुयं णिसामियं च सुए ॥२७॥

णिउक्को तूष्णीकः । णिरुलो मकराकृति[4]र्ग्राहः । णिहयं कूलम् । णिगढो घर्मः । णिसुयं तथा णिसामियं श्रुतम् ॥ यथा ।

णिसुए णिरुलोरावि णिसामिए सउणिकलयले [5]य वङ्क ।
णइणिहणागयजारं मुणिय णिउक्का हिसरइ णिगढे वि ॥ २७॥ (२७)

णिउरम्मि णियलमविसेसियम्मि णिरियं च णिक्खुडमकंपे ।
णिव्वेढणिव्वढा णग्गे णिज्झूहो [5]य णिव्वम्मि ॥२८॥

णियलं नूपुरम् । णिरियं अविशेषितम् । णिक्खुडं अकम्पम् । णिव्वेढो तथा णिव्वढो नग्नः । णिज्झूहो नीव्रम् ॥ यथा ।

णिरियट्ठाणाठाणय किं णियले णियसि णिक्खुडो चोर ।
जरणिज्झूहम्मि घरे णिव्वेढो णिव्वढेण पेल्लियइ ॥२८॥ (२८)

---

1 AB जुसे. 2 AB °अयाणं. 3 AB मयरा°.
4 BC °तिग्रा°. 5 C च.

अरिभवणम्मि णियारं णिव्वूढं पच्छिमंगणए।
कढिणम्मि णिक्कडं तह णिप्फेसो सद्दणिग्गमणे ॥२९॥

णियारं रिपुगृहम्। णिव्वूढं गृहपश्चिमा[1]ङ्गणम्। णिक्कडं कठिनम्। णिप्फेसो शब्दनिर्गमः॥ यथा।

धणुकड्ढणणिक्कडभुअ चालुक्क तुहं णियारणिव्वूढे।
णीसंकविलसिराणं सिवाण उल्लसइ णिप्फेसो ॥२९॥ (२९)

णट्ठम्मि णिराढो णिच्छिए णिरुत्तं [2]णए णिरिंको [3]य।
संतुट्ठम्मि णिसत्तो वि णिमेलं दंतमंसम्मि ॥३०॥

णिराढो नष्टः। णिरुत्तं निश्चितम्। णिरिंको नतः। णिसत्तो संतुष्टः। णिमेलं दन्तमांसम्। णिमेला इति धनपालः॥ यथा।

तुह घायणिमेलु[4]च्छुड्डदंतया रिउगया णिरिंकमुहा।
जंति णिराढा तह वि हु जए णिरुत्तं तुमं सि ण णिसत्तो ॥३०॥ (३०)

णिल्लंकणिलंका पडिग्गहम्मि णिज्झोमिणोमिणो रस्सी।
अंगु[5]ट्ठोइ णिरंगीणीरंगीओ अहियम्मि णिप्पट्ठो ॥३१॥

णिल्लंको तथा णिलंको पतद्ग्रहः। णिज्झोमी तथा णोमी रश्मिः। रज्जुरित्यर्थः। णिरंगी तथा णीरंगी शिरोऽवगुण्ठनम्। णिप्पट्ठो अधिकः॥ यथा।

णिज्झोमिखंचिओसहरहओ[6]इसे पियम्मि लेइ वहू।
णिप्पट्ठपेम्मविरइयणिरंगिया क[7]रयणिल्लंके ॥३१॥
किं मामि रोयसि तुमं णोरंगिं चइय आचम णिलंके।
पेक्खसि ण चिरा दइयं णोमीबद्धं पुरो बइल्लं व ॥३२॥ (३१)

---

1 C °ङ्गनम्. 2 AB णते. 3 C च. 4 AB °लुड्ड°.
5 AB °ट्ठीइ. 6 B° इत्ते. 7 AB °रइंचि°.

णिम्मंसू तरूणे णिब्भुग्गो भग्गम्मि णिक्खयं णिहए ।
सुत्तोट्ठियम्मि णि[1]व्विको णिस्संको य णिब्भरए ॥३२॥

णिम्मंसू तरुणः । णिब्भुग्गो भग्न । णिक्खयं निहतम् । णिव्विको सुप्तोत्थितः । णिस्संको निर्भरः ॥ यथा ।

णिस्संककामसरणिक्खया इमा सिविणए तुमं दट्ठुं ।
णिम्मंसुय निव्विक्ता णिब्भुग्गमणोरहा होइ ॥३३॥ (३२)

णिज्जोओ पयरे परि[3]हिए णियत्थं चलम्मि णिक्कज्जो ।
णिव्वाणं दुहकहणे थड्ढे [4]णिट्ठुहणिव्वूढा ॥३३॥

[5]णिज्जोओ प्रकरः । पुष्पावकर इत्यन्ये । णियत्थं परिहितम् । णि[6]कज्जो अनवस्थितः । णिव्वाणं दुःखकथनम् । [7]णिट्ठुहो तथा णिव्वूढो स्तब्धः ॥ यथा ।

णि[8]कज्जे जं [9]मससि णियत्थयहारं [10]फुलिंग[11]णिज्जोअं ।
[12]णिट्ठुहे णिव्वाणं कुणसु अणिव्वूढयाण तं अम्ह ॥३४॥ (३३)

गयकुसलोवकिईसुं णिम्मयणिग्घट्ट[13]णिज्जाया ।
सेदोचिय[14]उज्जाणा णिवायणिव्विट्ठणिब्भग्गा ॥३४॥

णिम्मओ गतः । णिग्घट्टो कुशलः । [15]णिज्जाओ उपकारः । णिवाओ स्वेदः । णिव्विट्ठं उचितम् । उपभुक्तार्थं तु निर्विष्टशब्दभवम् । णिब्भग्गं उद्यानम् ॥ यथा ।

णिब्भग्गणिम्मयं तं दट्ठुं पयडियणिवायसिढिलंगो ।
तम्मइ तुज्झ कए णिव्वि[16]ट्ठयणिज्जायणिग्घट्ट ॥३५॥ (३४)

---

1 AB °व्विट्ठो. 2 C च. 3 A °हियं. 4 AB णिट्ठुह°. 5 AB णिज्झोओ. 6 AB °क्कज्झो. 7 AB णिट्ठुहो. 8 AB °क्कज्झे. 9 AB मन्नसि. 10 A फुलिं°. 11 AB °णिज्झोअं. 12 AB णिट्ठुहे. 13 AB °णिज्झाया. 14 AB °उज्झाणा. 15 AB णिज्झाओ. 16 AB °ट्ठयणिज्झाय°.

सुत्तपसुत्तम्मि णिसायं चामुं¹डाइ णिम्मंसा।
णिद्दम्मो एगमुहम्मि णिंदिणिणियाणिया कुतिणाहरणे ॥३५॥

णिसायं सुप्तप्रसुप्तम्। चण्डालवाचकस्तु णिसायशब्दो निषादशब्दभवः। णिम्मंसा चामुण्डा। णिद्दम्मो एकमुखयायो। णिंदिणी तथा णियाणिया कुल्यणोद्धरणम् ॥ यथा।

केयारणिंदिणिकए णियाणियामुल्लजंपणमिसेण।
णिम्मंसदेउलं णिद्दम्म पिया वच्चइ णिसाए ॥३६॥ (३५)

णिसाला णोलच्छा णोलइया चेअ चंचुम्मि।
णिग्गिसं णिल्लसियं च णिग्गए पाडिए णिसुद्धं च ॥३६॥

णिसाला तथा णोलच्छा तथा णोलइया चञ्चुः। णिग्गिसं तथा णिल्लसियं निर्गतम्। णिसुद्धं पातितम् ॥ यथा।

णोलइयाइ हणंतो णोलच्छिवरी विसालणिसालो।
णिग्गिसजिओ हओ आसमणिल्लसियरावणणिसुद्धो ॥३७॥(३६)॥

णिज्झाओ णिच्छुंडो णिराहणिग्घोरणिप्फरिसा।
णिद्धंधसो अ ²णिव्वेरिसो अ अदए णिमेणमवि ठाणे ॥३७॥

णिज्झायादयः सप्त शब्दा निर्दयवाचकाः। णिव्वेरिसशब्दोऽत्यर्थेऽपि दृश्यते। णिमेणं स्थानम् ॥ यथा।

णिग्घोरे णिच्छुंडो अणिराहे को व्व ण हु ³अणिप्फरिसो।
णिद्धंधसे अणिव्वेरिसो अणिज्झाय कत्थ वि णि⁴मेणे ॥३८॥ (३७)

---

1 A °डाए. 2 AB णिव्वोरि°. 3 AB य णि°. 4 AB °मेणो.

अवि[1]भिन्नगेहए णिड्डमणिड्डयणिड्डमाया वि ।
णिअरट्ठिए [2]णिअरिअं णिअंधणणिअंसणा वत्थे ॥३८॥

णिडमो तथा णिडओ तथा णिडमाओ अविभिन्नगृहः। अत्र। णिअइ पश्यति। णिव्वाइ विश्राम्यति। णिमइ न्यस्यति। एते धात्वादेशेषूक्ता इति नोक्ताः। [3]णिअरिअं निकरेण स्थितम्। णिअंधणं तथा [4]णिअंसणं वस्त्रम्॥ यथा।

णिअरिअगुण सुणिअंसण णिअंधणं कड्ढ [5]णिडमो हविअ।
[6]णिडअ वयम्मि रमिमो किं पेम्मणिडमायाण ॥३८॥ (३८)

णिड्डमणं ओघसरे णिअक्कलं वट्टुले चेअ ।
णिव्वमिअं परिहुत्ते पाणिग्गहणम्मि णिव्वहणं ॥३९॥

णिडमणं गृहजलप्रवाहः। [7]णिअक्कलं वर्त्तुलम्। णिव्वमिअं परिभुक्तम्। णिव्वहणं विवाहः॥ यथा।

गंधव्वे णिव्वहणे तुह णिव्व[8]मिअं [7]णिअक्कलथणीए।
विरहे सुमरंतीए वाहेहिं वहइ णिडमणं ॥४०॥ (३९)

अट्ठम्मि [9]य णिक्खुरिअं णिरंतरे चेअ णि[10]त्तिरडी ।
ओआरणे णि[11]वच्छणणेवच्छणया चुअम्मि णिम्मरियं ॥४०॥

णिक्खुरिअं अदृढम्। णि[10]त्तिरडी निरन्तरम्। णि[12]वच्छणं तथा णेवच्छणं अवतारणम्। णिम्मरिअं स्रस्तम्॥ यथा।

णि[13]त्तिरडिविरहणिक्खुरिअतणू णिम्मरिअ अंसु पत्तपिए।
णेवच्छणगहखलिया सयमेव णिवच्छणोहुआ वहुआ ॥ ४१ ॥

---

1 AB °भिन्न°. 2 AB णियरियं. 3 AB णियरियं 4 AB णियंसणं.
5 A णिग्गमे, B णिग्गमो. 6 AB णिडय. 7 AB णियक्क°.
8 AB °मियं. 9 C च. 10 AB °त्तिरिडी. 11 A °वच्छुण°.
12 A °वच्छुणं. 13 AB °त्तिरिडि°.

अत्र। णियच्छइ पश्यति। णिरप्पइ तिष्ठति। णिम्माणइ णिम्मवइ निर्मिमीते। णिउड्डुइ नीयते। णि[1]हुवइ कामयते। णिआरइ काणेक्षितं करोति। णिरिग्घइ निलीयते। णिव्वडइ पृथक् स्पष्टो वा भवति। णिट्ठुहइ निष्ठ्यं करोति। णिव्वोलइ मन्युनौष्ठं मलिनं करोति।[2] णिल्लुंछइ मुञ्चति। णिउड्डइ मज्जति। णिच्छल्लइ णिज्झोडइ णिज्झूरइ छिनत्ति। णिसुढइ भाराक्रान्तो नमति। णिडुअइ चरति। णिट्टुहइ विगलति। णिम्महइ गच्छति। णिल्लसइ उल्लसति। एते धात्वादेशेषूक्ता इति नोक्ताः॥ (४०)

णिट्ठुहिअणिक्खसरियणिरुवक्कया थुक्कमुसियअकएसु।
णि[3]त्तिरडिअं च तुट्टे णीसारो मंडवे चेय॥४१॥

णिट्ठु[4]हिअं थूत्कृतं निष्ठ्यूतमित्यर्थः। णिक्खसरिओ मुषितः। अपहृतसार इति यावत्। णिरुव[5]क्कयं अकृतम्। णि[3]त्तिरडिअं त्रुटितम्। अत्र णिरुवारइ गृह्णाति। णिरि[6]णज्जइ पिनष्टि। इत्येतौ धात्वादेशेषूक्ताविति नोक्तौ। णीसारो मण्डपः॥ यथा।

तुह णि[3]त्तिरडिअथामा रिउणो णिक्खस[7]रिआ वसंति वणे।
णिरुवक्कयणीसारे तणहाइ सुमंतणिट्ठुहिया॥ ४२॥ (४१)

णीसंपायं परिसंतजणवए तह झुणिम्मि णीहरियं।
णीसीमिओ य णिव्वासियम्मि बाणम्मि णीलकंठो अ॥४२॥

णीसंपायं परिश्रान्तजनपदम्। णीहरियं शब्दः। णीसीमिओ निर्वासितः। णीलकंठो बाणवृक्षः॥ यथा।

वोलियवइ णिसमुहं णीसंपाए अणीहरियकंचो।
अहिसरइ णीलकंठीवणम्मि णीसीमियस्स तस्स कए॥ ४३॥ (४२)

---

1 AB °हुवइ. 2 A °डइ णिट्टुहइ B °डइ णिच्छ°. 3 AB °त्तिरिडि°. 4 AB °हियं.
5 AB °क्कयं. 6 A °णज्झइ. 7 AB °रिया.

णीसरिणआ णिस्सेणी णीआरक्खमवि बलिघडीए ।
णूला साहाए पट्टवासियाए [1]य णेडाली ॥ ४३ ॥

णीस[2]रिणआ निःश्रेणी । कप्रत्ययाभावे णीसणीत्यपि । [3]णीआरणं बलिघटी । अत्र णीइ णीणइ णीलुक्कइ गच्छति । णीरंजइ भनक्ति । णुव्वइ प्रकाशयति । एते धात्वदेशेषूक्ता इति नोक्ताः । णीहम्मियं निर्गतमिति तु निर्पूर्वस्य हम्मिधातोः सिद्धम् । णूला शाखा । अत्र णूमइ छादयतीति धात्वादेशेषूक्तमिति नोक्तम् । णेडाली पट्टवासिता शिरोभूषणभेदः ॥ यथा ।

णेडालिसुं[4]दर तुमं पुत्तय मा चडसु उच्चतरुणूलं ।
जं णीसणिपडिएसु वि णीआरणवक्खहाण होइ छलं ॥ ४४ ॥ (४३)

णेउड्डो सब्भावे कूवतुलाए [1]य णेलिच्छी ।
रविवणियसचिवसंढा णेसरणेसत्थिणेलच्छा ॥ ४४ ॥

णेउड्डो सद्भावः । णेलिच्छी कूपतुला । णेसरो रविः । णेसत्थी वणिक्-सचिवः । णेलच्छो षण्ढः । वृषभ इत्यन्ये ॥ यथा ।

णेस[5]त्थि अणेलच्छो तं णेउड्डेण णेसरत्थमणे ।
णेलिच्छिरयं सोउं वच्चइ जं जलमिसेण तुह जाया ॥ ४५ ॥

अत्र णेड्डं नोडमिति तु नीडशब्दभवमिति नोक्तम् ॥ ( ४४ )

भद्दवओज्जलदसमीऊसवभेअम्मि णेड्डरिया ।
उच्छुणि[6]वेलणकंडे तहेअ कुंडम्मि णंदं च ॥४५॥

णेड्डरिया भाद्रपदोज्ज्वलदशम्यां कश्चिदुत्सवविशेषः ॥ यथा ।

संकेयमागए उववणम्मि दूईइ भणिअ संलविया ।
अच्छिमरइ णायरवइ णेड्डरियादंसणमिसेण ॥ ४६ ॥

अत्र णोल्लइ क्षिपतीति धात्वादेशेषूक्तमिति नोक्तम् ॥

---

1 C च. 2 AB °णिया. 3 AB णीयार°. 4 AB °दरि.
5 AB °त्थिय णं°. 6 C °वीलय°.

॥ अथानेकार्थाः ॥

णंदं इक्षुनिपीडनकाण्डं कुण्डाख्यो भाण्डविशेषश्चेति [1]द्व्यर्थम्। केचित्तु इक्षुनिपीडनकाण्डवाचकाविव णंदकुण्डशब्दौ देश्याविल्याहुः। यदाह। इक्षु-निपीडनकाण्डं णंदं कुंडं च [2]णे णंदी। न तु कुण्डाख्यभाण्डवाची णंदशब्दो देश्यः। अस्माभिस्तूभयमपि दृष्टमित्यनेकार्थेषूपनिबद्धम् ॥ (४५)

घाणे मूके णक्को णक्खो कूवे खलग्गजेसु च।
कद्दमिए वइविवरे पओयणे णल्लयं णिमित्ते य ॥४६॥

णक्को घ्राणं मूकश्च। घ्राणे तु णक्कशब्दो नक्रशब्दभव एव। णक्खो कूपो दुर्जनो ज्येष्ठो भ्राता चेति त्र्यर्थः। ण[3]ल्लयं कर्दमितं वृतिविवरं प्रयोजनं निमित्तं चेति चतुरर्थम् ॥ (४६)

रयदुद्दिणेसु णड्डलमह णड्डवयमधिणाणिंदासु।
सब्भाविऽभिप्पाए णाउड्डो चोरकंचणे णिक्खो ॥ ४७ ॥

णड्डलं रतं दुर्दिनं च। णड्डवयं अघृणा निन्दा चेति द्व्यर्थम्। णाउड्डो सद्भावोऽभिप्रायश्च। मनोरथ इत्यन्ये। णिक्खो [4]चोरः काञ्चनं च ॥ (४७)

कउहक्कउमेसु णिव्वं णियथं रयसयणसासयघडेसु।
सुत्तोट्ठिए णिरासे उब्भडअकिवेसु अ णि[5]विड्डो ॥४८॥

णिव्वं ककुदं व्याजश्च। पटलान्ते तु णिव्वशब्दो नीव्रशब्दभव एव। णियथं रतं शयनीयं शाश्वतं घटश्चेति चतुरर्थम्। णि[5]विड्डो सुप्तोत्थितो निराश उद्भटो नृशंसश्चेति चतुरर्थः ॥ (४८)

सेयणगेसु णिहाओ पुट्ठे उव्वेढिए णि[6]रप्पो अ।
चोरट्टियपुट्ठेसुं [7]णिरक्कमुज्जुअदढेसु णिप्पिच्छं ॥ ४९ ॥

---

1 A द्यर्थः. 2 A गोनद्दीं B गोनद्दी. 3 AB °ल्लयं. 4 BC चोरः.
5 AB °विड्डो. 6 AB °रप्पो. 7 AB णिरिक्क°.

णिह्राओ खेदः संमूह्य । णि[1]रप्पो [2]पृष्टमुद्वेष्टितं च । [3]णिरक्को [4]चौरः स्थितः [5]पृष्टं चेति त्र्यर्थः । णिप्पिच्छं ऋजु दृढं च ॥ (४८)

पय[6]डोज्जुरिऊसु णिराओ [7]णिट्टं[8]कं च टंकिए विसमे ।
णिहुअं णिव्वावारे तुण्हिक्के तह य सुरयम्मि ॥ ५० ॥

णिराओ प्रकट ऋजु रिपुश्चेति त्र्यर्थः । [7]णिट्टंकं टङ्कच्छिन्नं विषमं च । णि[8]हुअं निर्व्यापारं तूष्णीकं सुरतं चेति त्र्यर्थम् । (५०)

णिव्वलियं जलधोए पविगणिए विहडिए चेय ।
वायसमूकेसु णिउक्कणो णिहेलणमगारजघणेसु ॥५१॥

णिव्वलियं जलधौतं प्रविगणितं विघटितं चेति त्र्यर्थम् । णिव्वलेइ दुःखं मुञ्चति निष्पद्यते क्षरति चेति धात्वादेशे सिद्धम् । णिउक्कणो वायसो मूकश्च । णिहेलणं गृहं जघनं च । अत्र । णिव्वरइ दुःखं कथयति छिनत्ति च । णिहोडइ निवारयति पातयति च । णिलुक्कइ तुडति निलीयते च । णिवहइ णिरिणासइ गच्छति पिनष्टि नश्यति च । णोलुंछइ निष्पतति आच्छोटयति च । णीरवइ बुभुक्षते आक्षिपति च । णीहरइ निःसरति आक्रन्दति च । णुमइ न्यस्यति छादयति चेति धात्वादेशेषूक्ता इति नोक्ताः ॥ (५१)

॥ इत्याचार्यश्रीहेमचन्द्रविरचिता[9]यां देशीनाममालायां चतुर्थो वर्गः ॥

---

1 AB °रच्चो. 2 C पृष्ठम्°. 3 णिरिक्को. 4 BC चौरः.
5 C पृष्ठं. 6 AB °डोज्जरि°. 7 AB णिट्टंकं. 8 AB °हुयं.
9 AB °यां स्वोपज्ञदेशीशब्दसंग्रहवृत्तौ चतुर्थो वर्गः ॥ छ ॥ ग्रंथः २३२ ॥

॥ अथ तादयः ॥

तंबा गाई तंटं [1]पुट्ठं सुत्तोप्पलेसु तग्गतणा ।
तट्टी व[2]ईइ सोगम्मि तमो तवणो [3]य भक्खम्मि ॥१॥

तंबा गौः । तंटं पृष्ठम् । तग्गं सूत्रम् । सूत्रमिति सामान्याभिधानेऽपि सूत्रकङ्कणमुच्यते । यदाह । तग्गं च सूत्रकङ्कणकम् । तणं उत्पलम् । तट्टी वृतिः । तमो शोकः । तवणो भक्षणयोग्यं कणादि ॥ यथा ।

तंटवहणतट्टिवि[4]हीहिं तंबचारणय तग्गवलणेहिं ।
तणलोयणा ण तवणिं कुणंति विरहे तमं जडा जंति ॥१॥ (१)

तमणं चुल्ली तहरो बहलसुरा वावडे तवओ ।
तसियं सुक्के सयणे तल्लडमोल्लम्मि तसायं ॥२॥

तमणं चुल्लिः । तहरो पङ्किला सुरा । तवओ व्यापृतः । तसियं शुष्कम् । तल्लडं शय्या । तसायं आर्द्रम् ॥ यथा ।

विरहम्मि तुज्झ सुहव तसिए [5]तसायकमलतल्लडए ।
तमणं व तप्पइ सही तहरीतवओ ण जाणसि तुमं तु ॥२॥ (२)

तच्छिंडं च करालि णयरारक्खे तलारो [3]य ।
तत्तिल्लो तल्लिच्छो [3]य तप्परे तणचए तणेसी [3]य ॥३॥

तच्छिंडं करालम् । तलारो नगरारक्षकः । तत्तिल्लो तथा तल्लिच्छो तत्परः । तणेसी तृणप्रकरः ॥ यथा ।

दोसगवेसणतत्तिल्ल तलारभया तणेसिअंतरिया ।
उअ [6]तइं तल्लिच्छा सा तमतच्छिंडे पडिच्छइ कुडंगी ॥३॥ (३)

---

1 AB सुडं. 2 A °ईच. 3 C च. 4 BC °हीहि. 5 AB तन्नाय°. 6 C तह.

**तरसं मंसं तंबेहितंबटक्कारियाउ सेहाली ।**
**इच्छाइ तक्कणा तंतडितींतडिया करंबम्मि ॥४॥**

तरसं मांसम् । तंबेही तथा तंबटक्कारी शेफालिका । तक्कणा इच्छा । तंतडी तथा तींतडी करम्बः ॥ यथा ।

> चय तंबेहिकुडंगं ण तंबटक्कारिरत्तवसणोऽयं[1] ।
> ण हु तरसतक्कणं [2]कंगुतींतडी कलमतंत[3]डो हरइ ॥४॥ (४)

**गोहुमकंकुमियाए [4]य तंबिरा तंबरत्ती [4]य ।**
**तरवट्टो पउमाडम्मि तडवडा आउलितरुम्मि ॥५॥**

तंबिरा तथा तंबरत्ती गोधूमेषु कुङ्कुमच्छाया । तरवट्टो प्रपुनाटः । तडवडा आउलिवृक्षः ॥ यथा ।

> महि तंबरत्तिरम्मे [5]छित्ते सुत्तम्मि तंबिरच्छि पिए ।
> तरवट्टतडवडाउलकुडंगए कीस चलिया सि ॥५॥

अत्र । तलिणं सूक्ष्ममिति तलिनशब्दभवम् । तरइ शक्नोति । तच्छइ तक्ष्णोति । तडइ तड्डवइ तनोति । एते धात्वादेशेषूक्ता इति नोक्ताः ॥ (५)

**इंदोवे तंबकिमी तणसोल्ली मल्लियाए [4]य ।**
**सुरयम्मि तत्तुडिल्लं पसारिए चेय तणरासी ॥६॥**

तंबकिमी इन्द्रगोपः । तणसोल्ली मल्लिका । तत्तुडिल्लं सुरतम् । तणरासी प्रसारितम् ॥ यथा ।

> जइ तत्तुडिल्लपंडिय तणसोल्लीवल्लहो गओ कालो ।
> तुह विरहे तणरासियतंबकिमी पाउसो कहं तोए ॥६॥ (६)

---

1 AB °णोयं. 2 C कंगुतंतडी कमलतींतडी. 3 C °डी च हरे. 4 C च. 5 C छित्ते.

सालिम्मि तलप्फलतालहला ह्नुहिए तडमडो [1]य ।
तंतुक्खोडो [1]य तुरी उडुवे [2]तरियव्वतणवरंडीओ ॥७॥

तलप्फलो तथा तालहलो शालिः। तडमडो चुभितः। तंतुक्खोडी वायकतन्त्रोपकरणम्। तरियव्वं तथा तणवरंडो उडुपः ॥ यथा।

कीस तलप्फलगोवीतडमडिओ जासि तालहलछेत्तं।
तंतुक्खोडिय वच्चसु तरियव्वणि[3]उत्त तणवरं[4]डोए ॥७॥ (७)

तद्दिअसं अणु[5]दिअसे तहल्लिया [6]चेव गोवाडे ।
तद्दियचयं च णच्चे तलयागत्तो [1]य कूवम्मि ॥८॥

त[7]द्दिअसं। अदूरविप्रकर्षात् त[8]द्दिअसियं तद्दिअहं इत्यपि। अनुदिवसम्। तहल्लिया गोवाटः। तद्दियचयं नृत्यम्। तलयागत्तो कूपः ॥ यथा।

तरुणतहल्लियरक्खय भुमयातद्दियचएण त[7]द्दिअसं।
तलयागत्तिं वच्चइ [9]णिसि वहुआ पाणियमिसेण॥८॥ (८)

तडफडियं परिचलियम्मि कु[10]रवए तंबकुसुमो [1]य ।
गालियअंगुलिएसुं तलसारियतणयमुद्दियाओ [1]य ॥९॥

तडफडियं परितश्चलितम्। तंबकुसुमो कुरवकः। तलसारियं गालितम्। अन्ये तु तलसारिओ नालिक इति पठन्तस्तलसारियं सुग्धमाचक्षते। तणयमुद्दिया अङ्गुलीयकम् ॥ यथा।

अइ तलसारियपेम्मय तुह विरहे तीइ एत्थ[11] तडफडियं।
तंबकुसुमस्स मूले थोपडिया तणयमुद्दिया कहइ ॥९॥

अत्र। तलचंटइ भ्रमति। इति धात्वादेशेषूक्तमिति नोक्तम् ॥ (९)

---

1 C च. 2 AB तडिय°. 3 AB °उव्व. 4 AB °डीए. 5 AB °दिवसे. 6 C चेच. 7 AB °द्दियसं. 8 AB °द्दियसि°. 9 AB थो वहुया. 10 AB °रवाए. 11 C इत्थ.

तालाः लाजा रम्मम्मि तामरो रोयणम्मि ताडिअ[1]यं
तारत्तरो मुहुत्ते जलभवफुल्लम्मि तामरसं ॥१०॥

ताला लाजाः। तामरं रम्यम्। ता[2]डिअयं रोदनम्। तारत्तरो मुहूर्त्तः। तामरसं जलो[3]द्भवं पुष्पम्। पद्मवाचकस्तु तामरसशब्दः संस्कृतसम एव॥ यथा।

ता[4]डिअयपरं बालं कुलडा ता[5]लाहिं भोलविय [6]जाइ।
[7]तारत्तरे[8]ण तामरतामरसे मरियतूहम्मि ॥१०॥ (१०)

तालप्फलो य दासो तित्तो सारम्मि दूसहे तिव्वं।
तिरिडो तिमिरे [9]तिणिरं महुपडले तिमिणमल्लदारुम्मि॥११॥

तालप्फलो दासो। तित्तो सारम्। तिव्वं दुर्विषहम्। तिव्वं अत्यर्थमिति सातवाहनः। तिरिडो तिमिरवृक्षः। [9]तिणिसं मधुपटलम्। तिमिणं आर्द्रदारु॥ यथा।

वयणाइं तालफलो असुणंती तिणिसतित्तिमहुराइं।
तिव्वविलियस्स पइणो ओ पहरइ तिरिडतिमि[10]णेणं ॥११॥

अत्र। तालिअंटइ भ्रमति। इति धात्वादेशेषूक्तमिति नोक्तम्॥ (११)

उवहपवणे तिरिड्डो तिंगिच्छी तिंगिया य कमलरए।
तिविडो पुडिया गुरु तित्तुयं च ण्हाणोल्लियम्मि [11]तित्तिरियं ॥१२॥

तिरिड्डो उष्णवातः। तिंगि[12]च्छी तिंगिया च कमलरजः। तिविडो पुटिका। तिविडा सूचीति केचित्। तित्तुयं गुरु। तित्तिरियं स्नानार्द्रम्॥ यथा।

तिंगिच्छिसुरहिजसभरणिव कलुसियतिंगिए तिरिड्डम्मि।
तित्तुयदुहा तुह रिउ णइतित्तिरिया जिमंति तिविडोए ॥१२॥ (१२)

---

1 AB °अयं. 2 AB °डियय°. 3 C °द्भवपु°. 4 AB °डियय°.
5 C °लाहि. 6 AB जाइ. 7 AB तारंतरे°. 8 B °ण म°.
9 AB तिणसं, 10 C °णेण. 11 AB तित्तुरि°. 12 C °च्छी तथा तिंगिच्छा क°.

